अ॰टी॰ या॥ हे कम्बुकण्ठि शुककिन्नरहंसवाणीत्यादि तस्यमेपुर्हिरेफाणांकर्णोत्पलनिपातिनाम् स्वरसंवादिभिः कण्ठैः शालिगोप्याजगुर्गुणान् क
१९ ण्ठः किमस्याः पिकवेणुवीणास्तिस्रोजिताः सूचयतित्रिरेखः इत्यन्तरास्तु यतकाचिदन्ननलेनभैमीकलमालपन्ती माधुर्यमित्यादि मधुद्रोणी
वमन्दाक्षमन्दाम्रवृष्टिवत् सुधासारइवद्राक्षागोपीवाणीतवप्रिये बाहुर्विसेनविद्युद्वल्लिमृणालैर्विसमृणालयोरवान्तरभेदविवक्षयोक्तम् अ
स्याभुजाभ्यांविजिताहिसात्किंपृथक्करोगृह्यततत्प्रसूनम् इहेक्षतेतन्नुगृह्याश्रितैः कैर्नगीयतेवाकरएवलोकैः विद्युन्मृणालसुभगावाहुवल्लीमृ
गीदृशः पूर्नान्तुकण्ठकाण्डेषुजाताकनकशृंखला करस्तुपद्मेनपल्लवविद्रुमाभ्याम् करकिशलयेनसुदृशारागसरित्पंकजेनेव शिथिलितविद्रु
ममहसास्यत्रहचेतनांनलेभे चन्द्रकलाकुन्दकोरकैश्चनखाः यथा॥ निर्भर्त्सिताशोकदलप्रसूतिपाणिद्वयंचारुनखंत्वदीयम् नवोदितेन्दुप्रतिम
स्यशोभांक्षोम्नः प्रदोषेविफलीचकार निर्दोषरत्नसुभगैः कुन्दकोरककान्तिभिः नखैः कमलपत्राणिबालाचक्रेपृथक्पृथक् पूगाञ्जनतत्कोर
कबिल्वतालगुच्छेभकुम्भाद्रिघटैश्चवक्षोजैः सौवीरजंबीरकवीजपूरसमुद्गकोलङ्गफलैरुरोजः यथा॥ कनकक्रमुकायितंपुरस्तादथपङ्केरुहकोर
कायमानम् क्रमशः कमलायमानमास्तेसुदृशोवक्षसिकस्यभागधेयम् कलशीयतिकुचकमलेकमलीयतिलोचनभ्रमरः अणुकीयतिपुनरस्या

हरिणदृशः प्रत्यहंमध्यः स्तनविल्वद्वयीलस्याः प्रययौचक्रवाकताम् उड्डीयपुनरद्रीर्णाजहारविपुलश्रीयम् चिरप्रवासिँस्तववाटिकायांवि
भर्तिचन्वारिफलानिवीरुत् सैवारजम्बीरकवीज पूरतालान्यसौधास्यतिकिंनजाने स्वगौवागुच्छौवेत्यादिस्वयंभूः शंभुरंभोजलोचनेत्वत्य
योधरः मस्तेनकस्यधम्मस्यचन्द्रचूडोभविष्यति संपुटंहाटकीयमित्यादि स्मनकतरुशास्वालम्विकोलङ्गः युग्ममित्यादिमहतोपिमहीयांस
मणियांसमणोरपि तत्प्रतीकविदुर्नूनमणुमध्येनभस्तनि रेखाकान्तातिसुभ्रया मारोमालिस्तेनतादृशैः शैवालधूमभृंगालिलतायैरुपमी
यते नाभीविलादुच्चलिताभुजङ्गीरोमालिरास्येन्दुसुधालिलिसुः समीस्यकेशावलिवर्हिमालामुरोजगिर्योः समलीयतान्तः सुगममिदम् नाभी
रसातलावर्तह्रदकूपनदादिभिः यथा॥ मदनसरितमेतांगाहमानोजनोसौजघनपुलिननाभीमण्डलावर्तरम्याम् मुखकमलस्तनाभ्यामुल्लस
त्कूलतोभिर्विरविरहसुताशायासमुक्ताञ्चकार त्वन्नाभिकूपः पातालेनितम्वस्तवमेदिनी पयोधरस्तेहेमाद्रिस्त्वंममासिजगत्त्रयम् ह्रदनदसौ
सिमामिवलीतटिनीरसात्मकञ्चवपुः तदपितलोदरिसंप्रतिकथमिवसंतापमातनुषे वलीतटिन्यातद्रूपैस्तत्समैः पाशादिभिस्तदाह त्रि
वलीपाशीस्त्वमातथावद्धः कामस्यसोपानमिवप्रयुक्तमितिदृष्टंकांचनपट्टकैः मुक्तावलिस्तेरदनाः दृष्टंकांचनपट्टकम् नखांशवस्तेरत्नानिम

खंच बिभर्ति पूर्णेन्दुवत्तुष्टयंया कलास्वतुः षष्ठिरूपैति वासेतस्याः कथं सुभुविमाननास्यात् गमनेहंसहस्तिवत्॥ यथा॥ गमनमलसयातैरित्या
दि साराजहंसैरिवसंनतांगीगतेषुलीलाञ्चितविभ्रमेष्वित्यादौ कटाक्षः यमुनावीचिभङ्गावलिविषामृतैः हालाहलस्वाविलसत्सुधावाभृङ्गाव
लीवायमुनोर्मयोवा निशाणदृष्टामदनेषवोवायद्वाकटाक्षाहरिणेक्षणायाः ज्योत्स्नेन्दुपुष्पपीयूषफेनकैरवकन्दुकः इत्यादि हसोहास्यं॥ यथा
ज्योत्स्नापुष्पपीयूषइत्यादि नूनंतेचोरितातन्विस्मितेक्षणमुखद्युतिः स्नातुमंभः प्रविष्टायाः कुमुदोत्पलपङ्कजैः मुक्ताप्यनगणनीया मुक्ता
फलंवास्फुटविद्रुमस्यमित्यादेः दर्शनेवमदन्त्वादि यथा॥ धवलयदिवजगदखिलंश्रावयदिवविम्बमेवविशिखैर्वा वमदिवकमलसहस्रैर्लोच
नमथीरशीजयति स्वाससुसुरभिसमः वहन्तिप्रातरंभोजसौरभोद्गारवासिताः मंदंमंदममीवातानिश्वासास्तावकाद्व हंससारसशब्दाभ्यांव
र्ण्यतेनूपुरध्वनिः॥ यथा॥ साराजहंसैरिवेत्यादि लीलाचलत्श्रीचरणारुणोत्पलस्फुरत्तुलाकोटिनिनादकोमलः शौरेरुपानूपमयाहरन्मनःस्व
रान्तराद्युन्मरसारसारवः अनश्रीपादानुसारिकविकल्पलताकारएतावदधिकमाह वेण्याः सर्प्याः सिभृंगाल्योधम्मिल्लस्यविधुंतुदः सीमन्तस्या
ध्वदण्डोचभ्रुवोः सप्यैक्षपाणकौ दन्तस्यजीरकाश्रेयामदिरकुमुदेदृशोः जिव्हायाःस्वंचलोदोलानासयाः पाटली तया॥ वल्लरीलहरीपाद्यः स

[illegible]मोऽभ्रहस्तकैः बाहु ॥ यथा ॥ युगायुगव्यायतबाहुरित्यादि भुजेभुजंगेन्द्रसमानसारेइत्यादौ अमुष्यदोर्भ्यामरिदुर्गलुंठने ध्रुवं गृहीता
गलदीर्घपीनता ॥ यथा ॥ [illegible]गोपुरस्फुरत्कपाटदुर्धर्षतिरः प्रसारिता नागेन्द्रगमनः पीनमैरावतकरायतम् दोर्द्वंद्वं भुवनागारस्तंभराजा
नमर्थसः यथा कपाटेन शिलापट्टेन वर्ण्यते ॥ यथा ॥ युगायुगव्यायतबाहुरंसलइत्यादि मध्येकार्श्यम् ॥ यथा ॥ अवन्तिनाथोयमुदग्रबाहु विश
[illegible]स्तनुवृत्तमध्यः इत्यादि ॥ उपमततापद्दे यथा ॥ कूर्माकारं चरणयुगलं धूतदिग्दन्तिशुण्डादण्डावूरू भुजयुगमपि व्यक्तनागेन्द्रशोभम् प्रायः
[illegible]पयोधिपयेतत्तमर्थोन्यदार्था नेकीकृत्यत्रिभुवनसृजा निर्मितायस्यमूर्तिः स्तनयोरिवनारीणामत्यन्तस्वच्छता हृदि ॥ यथा ॥ सा
निर्मितेतस्य मधुकमालाहरिस्थिता च प्रतिबिंबिता च ॥ ❧ ॥ ❧ ॥ किमत्र मग्ना किमुतीव मग्ना पञ्चेषुबाणालिरियं मलोकि नारीस्त
न[illegible] ॥ यथा ॥ प्रतिफलितं गलगरलं कज्जलमुद्रा पयोधरे देव्याः प्रातः प्रेक्षितुमिच्छम् गिरिजाहसितो हरो जयति कान्तिप्रयोजकं चावस्ता
[illegible]वर्ण्यते तत्रयोपि द्वयथा कृतावरोहस्य तयादुपानहौ ततः पदे रेजतुरस्य बिभ्रती तयोः प्रवालैर्वनयोस्तथाम्बुजैर्नियोद्धुकामे किमु बद्ध
[illegible] धातुताम्राधरः प्रांशुर्देवदारुवृहद्भुजः प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानभूत् चन्द्राननचन्द्रदिनमृगलोचनमृगशिम्ननसञ्जन्म कांचन

अ०शे० लपत्राणामेषैतस्यानुकारिणी इत्यादि॥ विस्तृतमन्यत्र इदमुपलक्षणम्॥ आह्लादत्वपुरस्कारेणचन्द्रादिसाम्यमुभयोरपि॥ यथा॥ इतिद्विजेनद्विज
२२ राजकान्तिरित्यादि इन्दुप्रभामिन्दुमतीवभावेइति स्फुरत्कमलपत्राभइतिश्रुतबोधेप्रतापोग्न्यादित्यव्याद्यैः कीर्तिश्चन्द्रादिशुभ्रकैः करेपद्मोर्ध्व
रेखादिपदैश्छत्रध्वजादिकम् गमनेहस्तिसिंहाभ्यांकार्श्यंच भुजादिषु॥ स्फुटमिहोदाहरणम् गमनेयथा॥ पूर्वंयथादेवपतेर्नियोगमूर्द्धावह
न्कार्मुकबाणहस्तः प्राप्तस्तथैवाशुगजेन्द्रगामीप्रोद्भिद्यमानेनवयोवनेन ततोमृगेन्द्रस्यमृगेन्द्रगामीत्यादि सुरूत्तरपदेव्याघ्रपुङ्गवर्षभकुञ्ज
राः सिंहशार्दूलनागाद्याः पुंसिश्रेष्ठार्थवाचकाः आदिपदादृषभोपिकर्तव्यारत्नसिंहाद्या नरराजादितः परात् विशेष्यभावोह्युसदांनरभूमिवि
शेषणात् यद्यप्यस्त्रामुद्रिकाद्युक्तान्तद्दुर्णयमुभयोरपि किन्तुशिष्टप्रयोगोऽत्रमपाकस्यतयेष्यते॥ इत्यलंकारशेखरेपुरुषवर्णनमरीचिः॥ इदानीं
सादृश्यप्रापकप्रकाशनाह इवाद्यैः प्रतिमानाद्यैस्समानाद्यैर्निभादिभिः वन्धुचौरारिवंश्याद्यैः सादृश्यप्रतिपत्तयः॥ तदाहुः इवाद्यैरिति॥ इवव
द्यथाशब्दाः समाननिभसंनिभाः तुल्यसंकाशनीकाशप्रतिमाप्रतिरूपकाः सदृक्सदृशसंवादिशब्दाः सादृश्यवाचकाः॥ प्रतिमानाद्यैरि
ति॥ प्रतिमानंप्रतिबिंबंप्रतिमाप्रतियातना प्रतिच्छायाप्रतिकृतिरर्चापुंसिप्रतिनिधिरुपमोपमानंस्यात्॥ समानाद्यैर्निभादिभिरिति॥ वाच्य

लिंगाः समानश्च सदृक्षः सदृशः शदृक्‌ साधारणः समस्तुल्यः स्युरुत्तरपदे त्वमी। निभसंकाससनीकाशप्रतीकाशोपमादयः बंधुरितिबन्धुर्भि
त्रंबयस्यश्च प्रेयान्प्रीतः सुहृत्सखा उपमानोपमेययोरेवम्॥चौरेति॥ चौरैकागारिकस्तेनदस्युतस्करमोषकाः प्रतिरोधिपरास्कन्दिपाट
च्चरमलिम्लुचाः मुखकान्तिचौरश्चन्द्र इत्यादिकर्तव्यम्॥अरीति॥रिपुवैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः द्विड्विपक्षाहितामित्रदस्युशात्रवश
त्रवः अभिघातिपराऽऽतिप्रत्यर्थिपरिपन्थिनः चंद्रस्यवैरिमुखंइत्यादिकर्तव्यम्॥ वंशाद्यैरिति॥ संततिर्गोत्रजननकुलान्यभिजनान्वयौ वं
शोन्ववायः संतानः सपिंडास्तुसनाभयः समानोदर्य्यसोदर्यसगर्भ्यसहजाः समाः सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः चन्द्रगोत्रे
चन्द्रसोदरं मुखमित्यादिकर्तव्यम्॥ प्रकारान्तरमाह॥ भृतकाद्यैश्च भृत्याद्यैर्न्यक्कारार्थैः क्रियापदैः सन्देहवत्तदाक्याद्यैः सादृश्यं प्रतिपद्यते
भृतकाद्यैरिति भृतको भृतिभुक्कर्मकरो वैतनिकश्च सः मुखस्य भृतकश्चन्द्र इत्यपि वोद्धव्यम्॥ भृत्याद्यैरित्यादि॥ भृत्ये दासेयदासेरदासगोप्य
कचेटकाः नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारकाः मुखदासः शशीत्यादिकर्तव्यम्॥न्यक्कारार्थैरिति॥ न्यक्करोतितिरस्कुर्वेन्प्रतिक्षिपतिभ
त्सीति आक्रोशत्यवजानातिकदर्थयतिनिन्दति विडम्बयतिसंरुधेऽवहसतीर्ष्यत्यसूयति त्वन्मुखंचन्द्रं न्यक्करोतिइतिध्येयम् तृणीकृतमधि

अ.चो. श्रियं निरस्तं च लघूकृतम् अनादृतमवज्ञातम् अम्भोजं लन्मुखेन्दुना ॥ सन्देहेति ॥ यथा ॥ किमिन्दुः किं पद्ममित्यादि  तत्तद्वाक्यैरिति ॥ तस्य पुसाति
२३ सौभाग्यं तस्य कान्तिं विलुम्पति तेन सार्द्धं विगृह्णाति तुलान्तेनाधिरोहति तस्य दक्षां पदं धत्ते तस्य कक्षां विगाहते तमर्थमनुबध्नातीति तच्छीलं त
न्निषेधति तस्य चानुकरोतीति तमर्थमनुविंदति आकारयस्याहूयते जिगीषति सर्वकहम् विधिरम्भोजसाम्राज्ये मुखेन्दुमभिषिञ्चति तस्य
मुखेन सहैकं कस्य चन्द्रं कर्तुमिच्छति भवतीन्दुर्न दासोपि त्वदास्यं चेत्किमिन्दुना चन्द्रमूर्ध्निपदं धत्ते यथा चंद्रप्रतप्यसि लीयते चन्द्रमाः क्का
पि बिभेति लवपलायते ॥ दण्डिनस्तु ॥ प्रतिच्छन्दसरूपादि सजातीयानुवादिनः सलक्षणसपक्षाभसवर्णतुलितादिकम् कल्पदेशीयदेशादियेचान्यू
नार्थवाचिनः समासश्च बहुव्रीहिः शशांकवदनादिषु भवन्तीत्यादि शब्दाश्च सादृश्यप्रतिपत्तये ॥ इत्याह ॥ कवीनां घटनाम्येव चराचर विलक्षण
भकर्तुमन्यथा कर्तुं कर्तुं पारमते जगत् ॥ इत्यलंकारशेखरे वर्णकरत्नम् ॥ इदानीं कविशिक्षाप्रदायस्य सर्वापेक्षया भ्यर्हितत्वं दर्शयन्नाह ॥ असतो
पि निबन्धो नसतामप्यनिबंधनात् नियमस्य पुरस्काराः संप्रदायस्थिताः कवेः असतोपीति वस्तुगत्या यन्न भवति तदपि कविभिर्वर्ण्यते ॥ यथा ॥ र
त्नानि यत्र तत्राद्रौ हंसा यत्र जलाशये जलेभाद्यं नभो नद्याम् अम्भोजाद्यं नदेष्वपि तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचिभेद्यता मुक्तात्वं कीर्तिपुण्यादेः

कार्ष्ण्यं चाकीर्त्यघादिषु प्रतापे रक्तता जलरक्तत्वं क्रोधरागयोः ज्योत्स्नापाने चकोराणां प्रवालं सर्ववीरुधाम् केसराशोकयोस्तत्स्त्रीगण्डूषात्याद
पातत्वः मरुन्मरेप्यपुन्नागजिरो मालिकालिविक्षियाम् ॥ सतामपीति पारमार्थिकमपि न निबध्यते ॥ यथा ॥ वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने
कामिदन्ते पुष्कराणां कुड्मलेषु चरक्तताम्रीणं स्यामता पातः स्तनयोर्वम्रवातथानियमस्येति हिमवस्यैव भूर्यत्वकृचंदनं मलये परम् हेमन्त
शिशिरेषु कामदेवेन कमलस्थितिः ॥ किंच ॥ सामान्यग्रहणे शैक्लुं पुष्पाम्भस्यमयासमाम् ध्वजचामरहंसानां हारस्तवकभस्मनोः कृष्णत्वं स
मुद्राहिमेघवारिधिवीरुधाम् भिल्लकाकासुराणां च धूमपंकशिरोरुहाम् लौहित्ये धातुमाणिक्यजवारत्नविवस्वताम् पद्मपल्लवबन्धूकदा
डिमीकरजादिषु पीतत्वं शालिमण्डूकवल्कलेषु परागके वर्णास्वेव शिखिप्रौढिर्माधवे च पिकध्वनिः ॥ अन्यच्च ॥ कमलासम्पदोः कृष्णहरितो
नागसर्पयोः पीतलोहितयोः स्वर्णपरागाग्निशिखासु च चन्द्रेशशैणयोः कामध्वजे मकरमत्स्ययोः दानवासुरदैत्यानामैक्यमेवाभिसंहितम्
॥ अपिच ॥ चिरन्तनस्यापि तथा शिवचन्द्रस्य बालता मान्यमौलितो वर्ण्या देवानां चरणतः पुनः भुवनानि निबध्नीयात्त्रीणि सप्त चतुर्दश चतस्रो
दिशो दश दिशश्चतुरः सप्त वारिधीन् अष्टादश स्मृता विद्याः चतस्रश्च चतुर्दश येस्थले ते जले जीवा भिन्नरूपस्तु कैरणेमृताः महत्त्वमादौ सर्गान्ते

अ.शे. शुभ्रताजगतामपि शैलादिर्भिद्यते शब्दान्नभः पूर्त्तिरथोद्गमं नामतस्तद्रुपाधौ स्यात्कलङ्कोमृगवाहनः चिह्नत्वेन वृषाङ्कोयं ध्वजेसत्वाद्वृषध्व
२८ जः शूलीनसर्प्पीगिरिशः शशीनहरिणीविधुः इन्दुमौलिर्महादेवोगंगामौलिर्न्नतुक्कचित् रलयोर्डलयोश्चैवववयोः सशयोर्न्नभित् नानुस्वा
रविसर्गौचचित्रभङ्गस्यसम्मतौ इयवद्वाहिहीहस्मउतवैसुकिलैवच पदान्येतानिदेयानिपादस्याद्येनजातुचित् भूतेन्द्रभारतेशास्त्राक्रमह
चन्द्रोनिरर्थकः दुर्योब्राह्मणोस्थिष्टिभोज्योपथपथादिषु॥ इत्यलंकारशेखरेसंप्रदायरत्नेनियममरीचिः॥ अथसंक्षेपेणवर्णनीयमाह॥ वर्ण्य
स्वरामारैषीश्वदेशोग्रामःपुरीसरित् सरोब्धयरण्योद्यानाद्रिप्रयाणरणवाजिनः हस्त्यर्कचन्द्राघृतवोविवाहोथस्वयंवरम् सुरापुष्पाः म्बुसम्भो
गविश्लेषम्मृगयाभ्रमाः कालान्तरंवयः सन्धौध्वान्तदृश्याभिसारिकाः॥ अथैषांविशिष्यवर्णनमाह॥ नृपेकीर्त्तिः प्रतापाज्ञादुष्टशान्तिविवेकिताः
धर्मप्रयाणसंग्रामशस्त्राभ्यासनयस्मृताः प्रजापालारिशैलादिनिवासोरिपुशून्यता औदार्यधैर्यगाम्भीर्यैश्वर्यस्थैर्योद्यमादयः देव्यांसौभाग्यलावण्य
शीलशृङ्गारमन्मथाः सपत्नीचातुर्यदाक्षिण्यप्रेममानव्रतादयः देशेबहुखनिद्रव्यपण्यधान्याकरोद्भवाः दुर्गग्रामजनाधिक्यनदीमातृकतादयः
ग्रामेधान्यलताश्वस्सरसीपशुपुष्टयः सेनाद्रिरुद्रकेदारग्राममल्लीमुग्धविभ्रमाः पुरेद्दपरिखावप्रप्रतोलीतोरणध्वजाः प्रासादाध्वप्रपारामवा

अ॰शे॰ सक्तुप्रपाप्रपालीमृगतृष्णाम्रादिफलपाकाः वर्षासु घनशिखिस्मयहंसगमापंककंदलोद्भेदो जातीकदम्बकेतकभञ्झानिलनिम्नगाहलिप्रीतिः शर
२५ दिंदुरविपटुत्वं जलाच्छतागस्त्यहंसवृषदर्पाः सप्तच्छदासिताभाब्जरुचिः शिखिपक्षमदपाताः हेमंते दिनलघुतामरुबकयवशीतसंपत्तिः॥ शिशि
रे कुन्दसमृद्धिः कमलहतिर्वीगुडामोदाः॥ विवाहे स्नानशुद्धाङ्गभूषातूर्यत्रयीरवाः वेदीसंगीतरामादिलाजमंगलवर्णनम् स्वयंवरे शचीरक्षा म
ञ्चमण्डपसज्जता राजपुत्रीनृपाकारान्वयचेष्टाप्रकाशनम् सुरापाने विकलतास्खलनं वचने गतौ लज्जामानच्युतिप्रेमाधिक्यं रक्तासता
भ्रमः पुष्पावचये पुष्पावचयः पुष्पार्पणार्थने दयिते मालागोत्रस्खलने क्रोधो वक्रोक्तिसंभ्रमाश्लेषाः जलकेलौ सरः क्षोभश्चक्रहंसापस
र्पणम् पद्मम्लानिः पयः क्षेपो सिरागो भूषणच्युतिः सुरते सात्त्विका भावाः सीत्काराः कुङ्कुमलासता काञ्चिकंकणमञ्जीररवो रदनखक्ष
ताः विरहे तापनिश्वासचिंतामौनकृशांगताः अब्दसंख्यानिशादैर्घ्यंजागरः शिशिरोष्णता मृगयायां चसंचारो वागुरानीलवेषता मृगाधिक्यं मृ
गत्रासो हिंस्रोद्राक्त्वगतित्वरा आश्रमे तिथिपूजैणविश्वासो हिंस्रशांतता यज्ञधूमो मुनिसुतासेको वल्कलं द्रुमाः पद्मकेकोत्सवः प्रातर्मध्या
ह्ने तापसप्लवः सायं सूर्येति लोहित्यं चक्रपद्मादिविप्लवः पूर्वं त्वंग्रतनक्षैम्नसंधिमाप्योपवर्णनम् एवं शैशवतारुण्यमाध्यस्थ्यं विषमं चतत्

अन्धकारेतिकाठिन्यंविम्बलोपसमर्थता आकस्मिकसमारंभोनिःशंकमभिसारिता रसेप्रचुरशाखत्वंदलादर्शितरूपता उच्चताप्रसवोत्कर्षो
बयः पथिकसेव्यता अभिसारेभयभ्रंशोमञ्जीरादितिरस्क्रिया साहसंरागितोत्कर्षा कालानुगुणकल्पना॥इत्यलंकारशेखरेवर्णनीयमरीचिः
नियमान्तरमाह॥ श्वेताश्चंद्रादयोज्ञेयानीलाः श्रीवैशवादयः शोणास्तुसात्रधर्माद्याः पीतादीपशिखादयः धूसराअथधूल्याद्याः ज्ञातव्याः
काम्यवर्त्मनि॥अत्रैवज्ञातव्यं॥ श्वेतानिचन्द्रशङ्खाम्बशंभुनारदभार्गवाः हलीशेषाहिशङ्खैभौसिंहसौधशरद्घनाः सूर्येन्दुकान्तनिर्मोकमन्दा
रहुहिमाद्रयः हिमहासमृणालानिस्वर्गेरण्डेभरदाभ्रकम् सिकतामृतलोध्राणिगुणकैरवशर्कराः नीलानिकृष्णचन्द्राङ्कव्यासरामधनंजयाः
शनिदुपरजाकालीराजपट्टविदूरजम् विषाकाशकुहूशस्त्रागरुपापतमोनिशाः रसाद्भुतशृंगारौतथापिकचराहवःशिखिचिंबमोरसः कण्ठः
खञ्जनकेकिनोः हत्याछायागजाङ्गारः खलान्तःकरणादयः शोणानिसात्रधर्मश्वत्रेतारौद्ररसस्तथा चकोरकोकिलापाराक्तनेत्रंकपेर्मुख
म् तेजः पुष्परागस्तंचभौमकुंकुमतक्षकाः जिह्वेन्द्रगोपखद्योतविद्युत्कुंजरविंदवः पीतानिदीपजीवेन्द्रगरुडेश्वरसज्जनाः ब्रह्मावीररसस्व
र्णकलिद्वापररोचनाः किंजल्कचक्रवाकाद्याहरितालंमनःशिला धूसराणिरजोलूताकरभोगृहगोधिकाकपोतमूषकोदुर्गाकाककंठखरादयः

अ॰ शे॰
२६

इदमुपलक्षणम्॥हरिताः सूर्यतुरगावुधोमरकतादयः इत्यपिबोद्धव्यम् द्वैरूप्येचाप्रसिद्धोचनियमोयमुदाहृतः अन्यद्वस्तुयथायत्स्यात्तत्तथैवो
पवर्ण्यते॥इत्यलंकारशेखरेमुक्तादिनियममरीचिः इदानींनियमांतरमाह एकस्मादासहस्रंचयद्यद्वस्तुयथाभवेत् तत्तत्कविप्रयोगेनज्ञातव्यं
काव्यमिच्छता॥अत्रैवज्ञातव्यम्॥एकरेन्द्रः करीचाभ्रोगजास्यरदमुक्तदृक् दृष्यपक्षनदीतीरनरश्रुतिभुजादिकम् त्र्यंबकाग्निभुवनगंगा
मार्गशहृग्गुणाः ग्रीवारेखामहीकोणस्तथाशूलशिखावली संध्यापुनःपुष्करणिरामविसुज्वरांघ्रयः चत्वारिवेदब्रह्मास्यवर्णाब्धिहरिबाहव
वः स्वर्दंतिदंतसेनांगोपाययामयुगाश्रमाः पंचपांडवरुद्रास्येन्द्रियस्वर्द्रुव्रतादयः महाभूतमहापापमहाकाव्यमहामखाः पुराणलक्षणंप्राण
निलावर्गेन्द्रियार्थकाः षड्गुजन्नकोणत्रिशिरोनेत्रतर्कांगदर्शनम् चक्रवर्तीमहासेनवदनानिगुणारसाः सप्तपातालभुवनमुनिद्वीपार्कवाजिनः
वाराश्वस्वरराज्यांगव्रीहिवह्निशिखादयः अष्टौयोगाङ्गवस्वाशामूर्तिदिग्गजसिद्धयः ब्रह्मश्रुतिव्याकरणदिक्पालाहिकुलादयः नवांगद्वार
भूखण्डकुन्तरावणमस्तकाः व्याघ्रीस्तनसुधाकुण्डभृङ्गारादिरसग्रहाः दशहस्तांगुलीशंभुबाहुरावणमौलयः कृष्णावतारोदिग्विश्वेदेवाव
स्येन्दुवाजिनः एकादशमहादेवाः सेनाश्वकुरुभूपतेः द्वादशार्कराशिमाससंक्रांतिगुहबाहवः शारिकोष्ठकसेनानीनेत्रक्ष्मापतिमंडलाः त्र

षोडशास्युस्तांमूलगुणाअथचतुर्दश विद्यास्वयम्भूराश्चैवभुवनध्रुवतारकाः तिथयः स्युः पंचदशषोडशेन्दुकलास्मृताः अष्टादशद्वीपविद्यापु
राणस्मृतिधान्यकम् विंशतीरावणभुजानेत्राद्यथशतंतथा धार्तराष्ट्राः शतभिषक्तारकापुरुषायुषम् रावणांगुल्यब्जदलंयज्ञपत्राब्धियोजन
म् सहस्रंजाह्नवीवक्त्रंशेषशीर्षाम्बुजच्छदाः रविरश्म्यर्जुनकरवेदशाखेन्द्रदृष्टयः उदाहरणमेतेषांप्रसिद्धत्वान्नलिख्यते प्रहृतेकेवलंपांथा
मादृशाः काव्यवर्त्मनि॥इत्यलंकारशेखरेसंख्यानियममरीचिः॥ इदानींप्रकारमुपदिशन्नेवकवीनांप्रकर्षवीजमाह॥गतागतंसमत्वंचसंस्कृ
तप्राकृतैक्यताम् तथावचनयोः साम्यंधर्मिधर्माभिधापिच कवयः कुर्वतेशक्ताः समस्यापूरणादिकम् आदिचतुष्टयंचित्रकाव्योपकारक
म्॥तद्यथा॥ममरुरुमध्यमसहासकारिकावररववनदानवसरसीरसगजभुजगतरुणीरुतरदसोदरनदभेदनवरभैरवकलपुलकपतदात
पद्यस्यादिः चकारादसाम्येकविस्फुटतार्थता राजानदीमालिकाराजतेदीनरक्षीपिनाकिनानन्दनवमसहसात्वनुतद्यस्यादिः रेजिरेवभूवतिष्ठती
त्याख्यातेसंस्कृतेत्यादियथा॥तत्रपुल्लिङ्गे॥हाराहारविहारसारसमराः संभोगभोगाध्वराः संहारामरवारवारणरणाष्टंहारवीराकराः लोलोल्ला
पविलासवायसह राहंकारहीरांकुरानीहारोरगतारगगतरलागोविन्दकन्दोदनाः॥स्त्रीलिंगे॥धरणीधारणीगोणीरोहिणीरमणीमणी कंदलीलह

अ॰शे॰ पीठभानाभिभेरीवसुंधरा॥नपुंसके॥जलफलपलमूलंचारिकीलालतूलंवलपललदकूलंतिंगगंभीरकूलम् सलिलकपलवीरंतुच्छराजीवनीरंहलरज
२७ तकुठारंवारुनालंपटीरम् भणगच्छदेहिसंहरकुरुरोचयमारयावगच्छेहि अवलोकयावचिन्तयधारयस्वादयेतिधातुजंविद्धि अेकस्मिन्नेवार्थे
बहुवचनैकवचनयोः॥साम्यंयथा॥ कव्यादोदेषिरोवारिफलिनोवर्हिणोनरः तादृशोभूरुहाद्याम्बमासफेरवसोमपाः एवंरथ्यमिमंथानशब्दाःखु
रणश्चाद्यः धर्मिधर्माभिधायिपदंयथा सुषिरादिप्रतीहारचुल्लपिल्लादिशात्रवः स्मेरालसौमत्सरद्यधर्मिधर्माभिधायकाः चकारादिशेषसामान्य
वाचकभावाभाववाचकपरिग्रहः॥ तदुक्तम्॥ शकुन्तधातुमरुतोगरुत्मत्कामदर्शनम् स्वच्छवंधूस्वगमनंचटकाद्यादिवाचकाः अपिधाना
द्यपूर्वादिभावाभावप्रदर्शनम् आदिपदात्आराद्युतभिन्नअवतंसादिपरिग्रहः॥इत्यलंकारशेखरेचित्रकाद्युपकारमरीचिः॥ समस्यापूर्ण
विकमिति इदंतुकठिनसमस्याभिप्रायेणतदुक्तंकवयःशान्ताः तत्रैवंप्रकारेणयदीदंस्यात्तदेदंस्यात्कर्ताविषयमेतिच अयोग्यःखलुकःशब्दः
कुत्रसंसर्गधीर्नहि प्रश्नोत्तरात्पदेभङ्गात्पूर्वस्मिन्नाद्ययोजनात् मिथ्याभिधाय्यसावेवअेषसार्वत्रिकः क्रमः॥प्रश्नेति॥केमण्डपन्तिस्तन
मण्डलानिकीदृश्युमाचन्द्रमसः कुतःश्रीः किमाहसीतादशवक्त्रनीताहारामहादेवरस्वातमातः॥पदेति॥मृगात्सिंहःपलायते मृगमत्तीति

मृगात्लेपत्वायमांसस्यइत्यर्थः करणात् पूर्वस्मिन्निति प्रत्यर्थिकीर्तिनिर्जितकज्जलधवलंयावककुसुममितिगावत् यथायथभावान्तरप्रकार
स्तु ओतत्वद्रेमयाद्दष्टचिरंन्यस्तंविलोकयताम् अदिष्टमेवत्संजातमिंद्रजालंविभावय प्रबोधयतिबालंभ्रमयथायो ॥प्रपूरयेत् सुबोधमिदम् प्र
कारान्तरं देवर्षिवरशापादेर्मयिमन्त्रौषधादिभिः मनोरथेनतपसाश्रयात्पुण्यचयेनच मायपाशंबरादीनांसर्वसंभावयेत्कविः तत्रदेहरूपम् त
वस्त्राकालिकंपुण्यम्॥भावादस्तु॥रागवात्सल्यशोकादेर्विनयेनमदेनच मतिभ्रमेणशौर्येणविपरीतकरः पुमानित्यादि॥विशेषस्तु॥कस्या
यद्याण्डसंसर्गप्रसितचक्षुषणुर्महान् युगान्तेचातिदूरोऽल्पनिकटेमहदप्यणुः हरेद्दधोमुखत्वेतुविम्बाच्चविपरीतता दृक्पीडनात्तनुव्यूहाद्भा
वनाविम्बतोबहु तमोऽकार्ष्ण्यादिभिः कार्ष्ण्यंशौक्ल्यंज्योत्स्नादिकीर्तिभिः लौहित्यंरक्तपीतादिसन्ध्यास्त्रकरादिभिः तिमिरंत्वद्भुतप्रयुक्तचक्षुर्मि
यम् रूपंचशैलोपतिपिपीलिकाइत्यादि मशकोपतिकुञ्जरइत्यादि विपरीतोभवज्जमइत्यादि एकोपिसशतंनृपइत्यादि मयीयतिजगत्त्र
यमित्यादि मेतद्विष्णपतेजगत् पद्मरागायतेजगत् क्रमेणयोद्भ्रमम् कास्तांचित्तमस्यानांनानाभुवनसंसर्गत्वात् तत्प्रकारः प्रदर्श्यन्ते ज
गतः प्रलयेभूमिर्योगीहस्तमनुधोदृती बलीन्द्रोहाटकेशीयपाताल्पादेरसातले रसातलेइतितृतीयाम्बया॥यथा॥द्यौर्विवेनजलेशार्ङ्गीत्वब्धि

मंथेद्वयंभुवि भुवीत्युभयान्वयी। पातालंवारणैःक्षिप्रेचन्दनद्रुमपन्नगैः ध्वजप्रासादधूलीभिर्भूमिःस्वर्गमुपाययौ। श्रीकृष्णस्योदरेसर्वसंसर्गःसार्व
कालिकः पातालंभूमिश्चस्वर्गंययावित्यन्वयः अगस्त्यंभोब्धिपानादिपौराणिककथाशतैः शिवादिदेवसंचारैस्तादृश्यैस्तत्तद्वर्णनम् शिवादीति
यत्रशिवोयातितत्रतन्नान्तरीयकतयासर्पचन्द्रानलादीनामपिगमनमवश्यकमित्यर्थः सादृश्यैरिति लक्षणायास्तूच्यग्रेपर्वतद्वयमित्यादौ
औचित्येनसंग्रामेकुम्भिमुक्ताभिर्दिवातारकितंनभः॥राजशेखरस्तु॥उत्पाटितैर्नभोनीतैः शैलैरामूलबन्धनात् तांस्तानर्थान्समालोच्यसम
स्यांपूरयेत्कविरित्याह॥वृद्धास्तु॥कः प्रत्येति प्रत्ती मोनद्राक्प्रत्येमिप्रतीहिच नहिनोतत्किमित्याद्यैरुक्तिमाश्रित्यपूरयेत्॥तथा॥पराजितश्च
द्भगवान्जरासंधेनजंतुना प्रतीतिरद्यमेयातामृगात्सिंहः पलायते मासंभावयशल्येनफाल्गुनस्यपराजयम् कः प्रतीयात्कुरुश्रेष्ठमृगात्
सिंहः पलायतेत्यादि नहिगांडीवकोदण्डोमृगादित्यादि तत्किंकमलपत्राक्षमृगात्सिंहः पलायते सुबोधमखिलम् शब्दानुच्छलितेसिन्धौ
शैलाण्डादौविदालिते त्वत्प्रतापाद्द्रवीभूतेस्वर्णाद्रौमलिनेरवौ विरहेसर्वेदहनः संतोषेसर्वमेवशशी कामिनिसर्वकाम्यंशान्तेलोष्टायतेविश्वम्
वैशेषिकेषुकाव्येषुगुणेषूत्कृष्टमन्दयोः अपेक्षयाचतंसर्गेस्यातामुत्कृष्टमन्दते वैशेषिकेषुरूपादिपञ्चस्तु काव्येशौर्यौदार्यसौन्दर्यादिषु

अपरिकलितकाव्यसरणिर्निमित्यं वशीकर्तुमनतिचिरमनुसरन्कविः अन्यैरजहल्लिंगैः साधारणविशेषणैः छन्दोज्ञात्वा पृथग्वाक्यैः स्वबुध्यामान
सीमयेत् समस्तापदंवाक्यमतन्मम् शिशूनांगतये स्वामिर्दिङ्मात्रमिहदर्शितम् काव्यकान्तारपान्थानामीदृगर्थेकियान्श्रमः॥ इत्यलंका
रशेखरे कविसामर्थ्यरत्नम्॥ रसआत्मेत्युक्तम् तत्रयथात्मानंविनाशरीरमप्रयोजकम् तथारसंविनाकाव्यम् तथाह साधुपाकेप्यनास्वाद्यंभो
ज्यंनिर्लवणंयथा तथैवनीरसंकाव्यंनस्याद्रसिकतुष्टये तत्ररसत्वमंगांगिभावापन्नसकलविभावादिसाक्षात्कारकत्वम् विशेषणसमूहालं
बनत्वारणापरसत्वव्यापिजातिरितिवयम्॥ केचित्तु॥ कारणेनाथकार्येणसहकारिभिरेवच व्यक्तत्वंनीयमानस्तुस्थायीभावोरसः स्मृतः कारण
मंगनानवयौवनादिकार्याणिस्तंभः स्वेदोथरोमाञ्चः स्वरभङ्गोथवेपथुः वैवर्ण्यमश्रुप्रलयावित्यष्टौसात्विकामताः सहकारिणउद्यानादयः ग्ला
न्यादयः॥ यदाहुः॥ विभावैरनुभावैश्चसात्विकैर्व्यभिचारिभिः आरोप्यमाणउत्कर्षस्थायीभावोरसः स्मृतः॥ तमिदानींविभजते॥ शृंगारहास्य
करुणरौद्रवीरभयानकाः बीभत्साद्भुतशान्ताश्चकाव्येनवरसाः स्मृताः भक्तिप्रेमस्तुसुखज्ञानान्नरसत्वादिमतेनभवत्येवेतिदिक्॥ तत्रशृं
गारंविभजते॥ संभोगोविप्रलंभश्चशृङ्गारोद्विविधः स्मृतः तत्रस्त्रीपुंसलक्षणेदृष्टप्राप्तेरतिरेवसंभोगः॥ तदुक्तम्॥ अनुरक्तौनिषेवेतांयत्रान्योन्यं

अ॰शे॰ विलासिनौ दर्शनस्पर्शनादीनि संभोगोयमुदाहृतः तत्र नायिकाश्रयसंभोगो यथा॥ शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैर्निद्राव्याज
२६ मुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गंडस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुंबिता आलो
कानम्रमुखीत्यन्वयः॥ नायिकाश्चतुर्धा॥ अनूढा च स्वकीया च परकीया च वराङ्गना त्रिवर्णिनः स्वकीया स्यादन्याः केवलकामिनः॥ तत्र॥ अनुरक्ता
तु लोकेन स्वयं या स्वीकृता भवेत् सानूढेति यथा राज्ञो दुष्यन्तस्य शकुन्तला देवतागुरुसाक्ष्येण स्वीकृता स्वीयनायिका परकीयाप्यनूढैव विशेष
स्तु स्फुटस्तयोः सामान्यवनिता वेश्या भवेत्कपटपण्डिता नहि कश्चित्प्रियस्तस्या दातारं नायकं विना अस्याः प्रकाशोऽन्यासां प्रच्छन्नो रमण
इति विशेषः ताश्चाष्टधा खण्डितोत्कण्ठिता प्रोषितपतिका चाभिसारिका कलहान्तरिता वासकसज्जा विप्रलब्धिका स्वाधीनभर्तृका चान्याश्च त
लोऽष्टधामताः नायकाश्रयो यथा॥ त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि श
य्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो निर्यातः शनकैरलीकवचनोपन्यासमालीजनः रूपसौभाग्यसंपन्नः कुलीनः कुशलो युवा॥
[illegible]त्यवाङ्नायकः प्रीतये स्त्रियाः अयं बहुप्रकारोपि संक्षेपेण चतुर्विधः॥ अनुकूलो दक्षिणश्च शठो धृष्टश्चेति यथा लीनरागोनुकूलः

स्यादनन्यरमणीरतः दक्षिणोऽन्यचित्तोपियः स्यादविकृतः स्त्रियाम् प्रियंवक्त्यप्रियंतस्याः कुर्वन्नविकृतीशठः धृष्टोज्ञातापराधोपिनविल
क्षोऽवमानितः॥ विप्रलम्भस्तु॥ भावोयत्ररतिर्नामप्रकर्ष मभिगच्छति नाधिगच्छतिचाभीष्टंविप्रलंभः सउच्यते अभीष्टंस्त्रीपुंसलक्षणमेव स
चापूर्वानुरागमानप्रवासकरुणात्मकः विप्रलम्भश्चतुर्द्धास्यात्पूर्वपूर्वोह्ययंगुरुः॥ तत्र॥ स्त्रीपुंसयोर्नवालोकादेवोल्लसितरागयोः ज्ञेयः पूर्वा
नुरागोयमलाभाद्रतिकामयोः॥यथा प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्तामुग्धदृशोनिसर्गमधुराश्चेष्टाभवेयुर्म
यि। यास्वन्तःकरणस्यबाह्यकरणव्यापाररोधीक्षणादाशंसापरिकल्पितास्वपिभवत्यानंदसान्द्रोलयः अथान्यावनिताशक्तमवगम्यस्ववल्ल
भम् ईर्ष्यावशेनवैमुख्यमेषमानउदाहृतः॥यथा॥ सापत्युः प्रथमापराधसमयेसख्योपदेशंविनानोजानातिसविभ्रमाङ्गवलनावक्रो
क्तिसंसूचनम् स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पलाबालाकेवलमेवरोदितिलुठल्लोलालकैरश्रुभिः प्रवासः परदेशस्थेद्वितीये
विरहोद्भवः यथा॥ त्वामालिख्यप्रणयकुपितांधातुरागैः शिलायामात्मानंतेचरणपतितंयावदिच्छामिकर्त्तुम् अस्रैस्तावन्मुहुरुपचितैर्दृष्टि
रालुप्यतेमेक्रूरस्तस्मिन्नपिनसहतेसंगमंनौकृतान्तः॥ इत्यादि॥ स्यादेकतरपंचत्वेदंपत्योरनुरक्तयोः शृङ्गारः करुणाख्योयमजस्येवरतेरि

अ.श्रे. व नंनु शृङ्गारस्य रतिप्रकृतिकत्वात्तस्याश्च सुखसंवेदनरूपत्वात्तस्य च विप्रलंभेऽभावात्कथं शृङ्गारभेद इति चेन्न धन्योहमस्याः कृते दशामि
३० मामनुभवामि इति तत्रापि तदभिधानात् कचित्संभोगपोषकत्वेन स्पृहणीयत्वाद्योतितं विस्तृतं मयैव वाक्यरत्ने ॥ भोपादस्तु ॥ रतिर्भवति देवा
दौ मुनौ पुत्रे नृपे गुरौ शृङ्गारस्तु भवेत् सैव या कान्ताविषया रतिः ॥ तत्र देवे यथा ॥ कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम् अप्यु
पात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥ मुनौ यथा ॥ हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः शरीरभाजां भवदीयदर्श
नं व्यनक्ति कालत्रितयेपि योग्यताम् ॥ पुत्रे ॥ एह्येहि वत्स रघुनंदन पूर्णचंद्र चुंबामि मूर्द्धनि सुचिरं च परिष्वजे त्वाम् आरोप्य वा हृदि दिवानिश
मुद्वहामि वन्देथवा चरणपुष्करकद्वयं ते ॥ नृपे यथा ॥ ते कौपीनधनास्त एव हि परं धान्नी फलं भुंजते तेषां द्वारि नदन्ति वाजिनिवहास्तैरेव लब्धा
क्षितिः यैरेतत्समलंकृतं निजकुलं किंवा बहु ब्रूमहे ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥ गुरौ यथा ॥ हा तात विश्वजनवत्सल मामकी
न जीवितधनद्युमणिवंशावतंसभूत स्याचेद्रघुस्कुलजसद्मनिचेटकः स्यां यद्वा भवच्चरणपंकजरेणुरेव हासमूलः समाख्यातो हास्यनामा र
सो बुधैः चेष्टाङ्गवेषवैकृत्याद्धासो हास्यस्य चोद्भवः कपोलाक्षिकृतोल्लासो भिन्नोष्ठः स महात्मनाम् विदीर्णास्यश्च मध्यानामधमानां स शब्द

कः॥ यथा॥ मयुं सख्यामिलितात्मा प्रियापि प्रेषितमनः तच्च तत्रैव रमते हताः पाणिनिनावयम् शोकोत्थः करुणोज्ञेयस्तत्र भूपात्तु रोदनं वैवर्ण्य
मोहमिश्रैद् प्रलपाभूमिविवर्ण्येत॥ यथा॥ मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी गतिस्तयोरेषजनस्तमर्दयन्नहो विधे त्वां करु
णा रुणद्धि नो॥ क्रोधात्मको भवेद्रौद्रः क्रोधः प्रोक्तश्च वैरिणः भीष्मवृत्तिरसामान्यो भवेदुग्रक्रियाश्रयः स्वांसघात स्वयं शस्त्रोत्क्षेप भ्रुकुट यस्त
था अन्यातिजनाक्षेपो स्खलनं चोपवर्ण्यते॥ यथा॥ कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः नरकरिपु
णा सार्द्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् उत्साहात्मा भवेद्वीरो वलशस्त्राश्रयश्च सः नायकोऽत्र भवेत्सर्वै
श्लाघ्यैरभिमतैर्गुणैः॥ यथा॥ क्षुद्राः संत्रासमेते विजहत हरयो भिन्नशक्रेभकुंभा युष्मद्गात्रेषु लज्जां दधति परममी सायका निष्पतन्तः सौ
मित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि भयानको भवेद्भीतिप्रकृतिर्घोरव
स्तुनः स च प्रायेण वनितानीचबालेषु दृश्यते दिगालोकास्यशोषाङ्गकम्पगद्गदसंभ्रमाः स्तंभवैवर्ण्यमोहाश्च वर्ण्यन्ते विबुधैरिह॥ यथा॥
ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् शष्पैरर्द्धावलीढैः श्रमविवृ

अ॰शे॰ तमुत्कम्पं नितिभिः कीर्णवर्मा मन्येऽग्रतु तत्वाद्दूपतिवहुलं स्तोकमुर्व्यां प्रयाति बीभत्सः स्याज्जुगुप्सातः सोहृद्य श्रवणेक्षणात् निष्ठीवनास्यभं
३१ गाक्षिसंकोचमहृतांनच ॥ यथा ॥ उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसान्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रगंधीनि
जग्ध्वा आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंस्थापुटकगतमपिक्रव्य मव्यग्रमत्ति विस्मयात्स्याद्भुतोज्ञेयः
सत्वासंभाव्यवस्तुनः दर्शनाकर्णनाद्वापि प्राणिनामुपजायते तत्र नेत्रविकारः स्यात्पुलकः स्वेद एव च निस्पन्दनेत्रता साधुसाधुवादास्तथाम
ताः चित्रे कनकलतायां शरदिन्दुस्तत्र खंजनद्वितयं तत्र च मनोजधनुषी तदुपरि गाढांधकाराणि सम्यग्ज्ञानसमुत्थानः शान्तो निस्पृहनाय
कः रागद्वेषपरित्यागे सम्यग्ज्ञानस्य चोद्भवः पश्चात्तापः शरीरादिष्वपावहस्तु विडंवनम् विवेकचित्तस्थैर्यादियोगाद्याः स्तस्य लक्षणं ॥ यथा ॥ अ
हौ वा हारे वा कुसुमशयने वा दृषदि वा मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्यारण्ये
शिव शिव शिवेति प्रलपतः स्वर्गस्त्रीसमूहः अत्राहिरिपुहारोहेयेन तु हारवदहिरप्युपादेय इति वोद्धव्यम् अत्र सर्वत्र तत्तद्रसत्वमात्रे उदाह
रणमिति ज्ञातव्यम् रसानां सनामविरोधविरोधावाह शृङ्गारहास्यौ करुणवीभत्सौ वीररौद्रकौ भयानकाद्भुतौ मित्रे मिथः शान्तो नकस्य

वित् शान्तेकरुणेबीभत्सेनमिश्रितो हि चातुरः शृङ्गारे वीरतकरुयोर्हास्यस्य करुणोऽरिपुः अत्रकरुणबीभत्सयोर्मैत्री विशेषाभिप्रायेणस्मर्तव्यम्॥
स्थायिभावेषु मतं तु नामत आह रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा जुगुप्साविस्मयौभावा निर्वेदः स्थायिनोनव स्थायिनोभावानवेत्यर्थः
ननु निर्वेदस्य कथं शान्तरसस्थायित्वं व्यभिचारित्वादिति चेन्न अधिकरणभेदेनोभयाविरोधादित्यन्यत्रविस्तरः स्थायिलक्षणंतु विरुद्धैरविरुद्धै
र्वा भावैर्विच्छिद्यतेन यः आत्मभावं नयत्यन्यान्स्थायीभावः सउच्यते यथालवणाकरः विरुद्धैर्जुगुप्सादिभिरविरुद्धैरित्यादिभिर्योनविच्छिद्यते
॥ विशेषलक्षणं तु ॥ मनोनुकूलविषयसुखात्मकं संवेदनं रतिः अङ्ग-क्रीडादिभिश्चेतोविकारोहासः इष्टनाशादिजनितंचित्तवैक्लव्यंशोकः प्र
तिकूलेषु तैक्ष्ण्यप्रबोधः क्रोधः कार्यारंभेस्थिरसंरंभउत्साहः व्याघ्रादिदर्शनादिजनितंमनः क्लैव्यमभयम् दोषदर्शनात्पदार्थेगर्हणंजुगुप्सा लो
कसीमातिक्रान्तपदार्थविषयश्चित्तविकारोविस्मयः तत्त्वज्ञानादीर्ष्यादिभिः स्वावमाननंनिर्वेदः एतेचसर्वभावेषुमुख्याः यदाह॥ यथानराणां
नृपतिः शिष्याणां च यथागुरुः तथासर्वेषुभावेषुस्थायीभावः स्मृतोमहान् विभावोद्विविधः उद्दीपनआलंबनश्च तत्रकोकिलवसन्तादिरुद्दीप
नः नायिकादिरालंबनः येनादपि अस्माकंमतेरतित्वादिकमनुभावत्वादिकंजातिरेव नहिवैशेषिकादिवदस्मत्प्रक्रियेति॥ अनुभावलक्षण

अ॰शे॰ न्तु॥अनुभावो विकारस्तु भावसंसूचनात्मकः॥तत्र॥हेलाविच्छित्तिविब्बोककिलकिंचितविभ्रमाः लीलाविलासो हावश्च विक्षेपो विहृतो मदः
३२ मोट्टायितं कुट्टमितं मौग्ध्यं च तपनं तथा ललितं चेत्यमी हावाश्चेष्टाः शृङ्गारभावजाः एतच्चास्माभिरेव प्रपंचितमन्यत्र॥सात्विकलक्षणन्तु॥
विशेषेणाभितः कार्यं स्यापि निर्भावयन्ति ये अनुभूतादिहेतूंस्तान्वदन्ति व्यभिचारिणः आदिपदात्स्वेदादिपरिग्रहः तेच निर्वेदग्लानिशं
काख्यास्तथासूयामदश्रमाः आलस्यं चैव दैन्यं च चिंतामोहस्मृतिर्धृतिः व्रीडाचपलताहर्षश्चावेगोजडता तथा गर्वो विषाद औत्सुक्यं निद्राप
स्मार एव च सुप्तं विबोधोमर्षश्चाप्यवहित्थमथोग्रता मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः अमी
च प्रत्येकं भाव्यन्ते क्वचित्सर्वभावतापि यथा क्वाकार्यं शशलक्ष्मणः इत्यादौ अत्र क्वाकार्यमिति वितर्कः भूयोपि दृश्येतेत्यौत्सुक्यम् दोषाणा
मितिमतिः कोपेपीति स्मृतिः किं वक्ष्यन्तीति शंका स्वप्नेपि सा दुर्लभेति दैन्यम् चेतः स्वास्थ्यमुपैहीति धृतिः कः खल्वित्यादि चिन्ता॥ इत्यलंका
रशेखरे रसमरीचिः॥ परे रसदोषाभावानुकूलवर्णादयः काव्यशरीरं मन इत्युक्तमतो रसदोषानिदानीमाह॥ स्वस्वशब्देरुपादानं भावस्य च रस
स्य च कष्टकल्पनीयत्वं अनुभावविभावयोः प्रकृतेरसवैरित्वन्तेषां व्यक्तिविपर्ययः अनौचित्यं च सर्वत्र रसे दोषाः स्युरीदृशाः सामान्यतो

विशेषतो वा स्वस्ववाचकशब्दप्रतिपादकानां निर्वेदादीनां रत्यादीनां वा रसाननुगुणत्वमिति सकलानुभवसिद्धं ॥ तत्र व्यभिचारिणः स्वस्वशब्दोपा
दानम् यथा ॥ सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चंद्रेमृतस्यन्दिनि सेर्ष्या जह्नुसुतावलोकनविधौ दीना
कपालोदरे पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः सव्रीडा नयननिपातनात् अत्र व्रीडादीनां स्वस्वभावप्रतिपादितानां चमत्कारज
नकत्वस्य सहृदयसाक्षिकतया तदभावे रसभंग इत्युचितम् एतदेव प्रत्युदाहरणं प्रतिपादयन्ति ध्यानम्रा दयितानने मुकुलिता मातङ्गचर्मा
म्बरे सोत्कम्पा भुजगे निमेषरहिता चन्द्रेमृतस्यंदिनि मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदर इत्यादि ॥ स्थायिनो यथा ॥ संप्रहारे प्र
हरणैः प्रहाराणां परस्परम् झणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् संप्रहारः संग्रामः अत्रोत्साहस्य रसस्य स्वरसशब्दस्य प्रतिपादित
स्य रसाजनकत्वम् यथा ॥ तामनङ्गजयमंगलश्रियं किंचिदुच्चभुजमूलशोभिनीम् नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः शृ
ङ्गारेति प्रतिपादितस्य यथा ॥ आलोकय कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिराममूर्तिम् पश्यैष बाल्यमतिवृत्त्य विवर्तमा
नः शृङ्गारसीमनि तरङ्गितमातनोति ॥ अनुभावस्य कष्टकल्पनीयत्वं यथा ॥ कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यू

अ०शे० नः लीलाशिरोंऽशुकनिवेशविशेषक्लृप्तिर्व्यक्तस्तनोन्नतिरभून्नयनावनीसा अत्रचन्द्रोदयउद्दीपनविभावाः शृङ्गारयोग्यानुभावप्रतीत्यास्वा
३३ दनाय्यमेवस्थापिनः स्थिताः यद्यप्यंशुकनिवेशोऽनुभावत्वयोग्यस्तथापितस्यनभक्तिप्रयोजकत्वेनोपादानादनुभावत्वापर्य्यवसानम्॥ प
द्य॥पुनर्निष्कृष्टएवशृङ्गारः प्रतिपिपादयिषितः अभून्नयनावनीसेत्यनेनतस्यैवालम्बनत्वप्रतिपादनात् नचपुंसिकश्चिदनुभावउपात्तः नच
विभावैराक्षेपाईद्दुविकटेनकल्पनीयः॥विभावस्ययथा॥ परिहरतिरतिं मतिंलुनीतेस्खलतितरांपरिवर्ततेचभूयः इतिवतविषमादशास्य
देहंपरिभवतिप्रसभंकिमत्रकुर्मः इत्यनेनप्रकारेणास्यदशादेहंपरिभवतीत्यन्वयः अत्ररतिपरिहारादीनामनुभावानांकरुणादावपि
संभावनात्कामिनीरूपोविभावोऽप्यत्रप्रतिपाद्यः प्रकरणादिसापेक्षत्वात्॥ प्रकृतरसविरोधिविषयकोविभावादिः॥ तत्रविभावव्यभिचा
रिणामुदाहरणम् यथा॥ प्रसादेवर्तस्वप्रकटयमुदंसंत्यजरुषंप्रियेशुष्यन्त्यंगान्यमृतमिवतेसिञ्चतुवचः निधानंसौख्यानांक्षणमभिमुखं
स्थापयमुखंनमुग्धेप्रत्येतुंप्रभवतिगतः कालहरिणः अत्रशृङ्गारेप्रतिकूलस्यशान्तस्यानित्यताप्रकाशनरूपोऽनुभावः तत्रप्रकाशितोनिर्वेदस्य
व्यभिचार्य्युक्तियुक्तेः शान्तेनिर्वेदस्यस्थायित्वात्॥ व्यक्तिविपर्ययइतिपद्यांशोपदूषणमनुचितंचेति॥ तत्रतद्दूषणम्॥ व्यक्तयोदिव्याः अदिव्या

दिव्यादिव्याश्च तत्र दिव्यत्वममर्त्यैकरूपकता यथा॥ शिवादेः शेषादेः अदिव्यत्वं यथा माधवादेः दिव्यादिव्यत्वं श्रीकृष्णादेः त्रिविधा अप्येते प्रत्येकं चतु
र्विधा भवन्ति वीररौद्रशृंगारशांतरसप्रधानाः धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः यथा॥ रामभार्गवश्रीकृष्णजीमूतवाहनाः अेतेचोत्त
ममध्यमाधमभेदाद्बहवो भवन्ति तत्र स्वःपातालगमनसमुद्राद्युल्लङ्घनपर्वतस्फोटनाद्युत्साहो दिव्येष्वेव वर्णनीयः अदिव्येषु तु यावदेवलो
कप्रसिद्धमुचितं तावदेव वर्णनीयम् अनौचितौ च महान् स दोषः स च भवानीशंकरादीनां पित्रोर्वा केलिवर्णनम् अत्युक्तिर्वा नभःस्थास्त
नाशयित्यनौचिती इत्यनेनास्ति वर्णनम् यद्यपि कुमारसम्भवे कालिदासेन वर्णितम् तथाप्यर्वाचीनैर्न कर्तव्यम् नहि गजादीनामुदर्य्य
स्तेजो वटकाष्ठमशितं पचतीत्यस्मदादीनामुदर्य्येण तैजसा तथा भवितव्यमिति न्यायात् तस्यापि दोषत्वाद्बहुदोषान्वक्तुम्वदन्ति दोषेष्व
ति विवेकोऽसुकविलोकविलोचने काव्यमीमांसितकप्राप्तमहिमा महिमा इतः॥ यदाह महिमा॥ अनौचित्यादृते नान्यद्रसभंगस्य कारण
म् प्रसिद्धौचित्यमूलाहि रसस्योपनिषत्परा ईदृश इत्यनेनान्येनौचित्यहेतवो दोषा भवन्तीति दर्शितम्॥ यथा॥ नायिकायामानादिना च
रणप्रहारादिना वा नायकस्यात्यन्तिककोपादिवर्णनम् व्यक्तिविपर्ययानौचित्ययोरवान्तरभेदविवक्षया भेदः अमीषां क्वचिद्दोष

अ० लापि यत्रनरसहानिर्भवतितद्यथासहृदयैरेवपर्य्यालोचनीयमिति ग्रंथगौरवभयान्नेहतन्यतइति॥इतिश्रीमाणिक्यचन्द्रविरचितेलंका
३५ रशेखरेरसदोषमरीचिः॥उद्दामावीररौद्रादौकुर्वरीत्यात्वरादयः हृद्याः शृङ्गारहास्यादौपरयोर्मध्यमागतिः इदानीमनुकूलान्वर्णनीयाना
ह वीरादावित्यादि पदेनभयानकस्यहास्यादावित्यत्रकरुणस्यपरिग्रहः परयोर्वीभत्साद्भुतयोः शान्तस्यनियमोनास्तीतिहृदयम्॥उद्दामेतिच
न्द्र-टंडकठूंसिलगधरादिरीतिर्गौडी असरेषुश्रीपादः उद्दामाः स्वान्तरालेनसजातीयेतरेणच योगाद्याश्चैवचत्वारः शेषाविकटगुम्फना हृद्या
उपेन्द्रादिकंदद्दरीतिर्वैदर्भीअसरेषुपुनः स्तुएवं नसौचलध्वन्तरीतौनश्वोपर्य्यनुनासिकः असमासोप्यसोल्पोवाहृद्यंस्यात्तंधिसौरव्यव
तमयथा॥अनङ्ग-रङ्ग-प्रतिमंपदङ्ग-भङ्गीभिरङ्गीकृतमानताङ्गाकुर्वंतिपूर्नांसहसायथैवास्वान्तानिशान्तापरचिन्तितानि अत्रवैपरीत्यंदोष
येतिमनसिकृत्वाक्वचिददोषतामाह वक्तृवाच्यप्रबन्धानामौचित्येनक्वचित्क्वचित् रचनावृत्तिवर्णानामन्यथात्वमपीष्यते॥यथा॥मन्थायस्त
र्णवाम्भः स्थितकुहरचलन्मन्दरध्वानधीरः कोणाघातेषुगर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः कृष्णाक्रोधाग्रदूतः कुरुशतनिधनोत्पातनि
र्घातवातः केनास्मत्सिंहनादप्रतिरसितसखोदुंदुभिस्ताडितोयम् भेरीशतसहस्राणिढक्काशतशतानिचएकंदायत्रहन्यन्तेकोणाघातः सउ

कृते अत्र हि वाच्यमुद्दामं प्रबंधत्वात् प्रबंधश्चाभिनेयत्वान्न तथा किन्तु वक्ता भीमसेन इति तदौचित्यादुद्दामा वर्णा द्वयः क्वचिद्वाच्यौचित्यात्
यथा शंकुव्याकीर्णरङ्कु द्रुतनिशितशरस्तुण्डदीर्णस्तरक्षुर्व्याधोषक्षुब्धकण्ठीरवखरवचकितध्वस्तमातंगयूथम् खड्गव्यालूनखड्गं तुमुलकल
कलप्रान्तकृत्सच्छकुन्तं भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्मतेन प्रतेने अत्र हि वाच्यस्य सर्वप्राणिविप्लवात्मकमृगयया एव तथात्वात्
त्वम् क्वचित्प्रबंधौचित्यात्॥ यथा॥ कादम्बर्यादौ शृङ्गारेपि नमसृणा वर्णा इति दिक्॥ सर्वसाधारणं दोषमाह॥ गृहीतमुक्तको नेष्टो हरवाणा
मरौषिता मात्राभेदोप्यतः स्याष्यः पदोप्येषशुभावहः एकस्य पदस्य शेषे यो वर्णः सोपरस्याद्येन दीयते यथा॥ नाककलाहकाररेफचकारा
णां सुतराम्॥ यथा॥ प्रवाहहरितादूर्वाविवाहरसितं तथा स्फूर्जत्काचचयाभूमिर्भूयः पुण्यैरवाप्यते मात्राभेदेपि स्वल्पो दोष नाककादम्वि
नी पदैत्वेणन दोषः किन्तु गुणः॥ यथा॥ वन्दामहे महेशानं इत्यादौ अन्यदप्याह रलयोश्च चवर्णस्य शैथिल्यायैव भूरितारेफलकारचवर्गा
णां भूयस्त्वं शैथिल्य हेतु तथा रसहानिकरमित्यर्थः॥ संधौ वर्णदोषमाह॥ रसहास्तादतिहृद्येन मशरहा हाहकारश्च कचतपशराशक्व
राद्धरादौ स्यात् भूयस्संयोगः तात् सकारात् कात् ककारात् अधराअधोवर्त्तिनः अतिहृद्ययोः शृंगारहास्ययोः रसयोर्दोषाय भवन्ति शब्द

अ॰ शे॰ दीपकस्यान्वयबोधविरोधिता अस्यतु तस्मिन्नपि रसहानिरिति विशेषः अनैकान्तिकबाधयोरिवानुमितौ भेतद्भिन्नेतरद्रितिरहस्यम् भू
३५ यसां वर्णनायोगः कार्त्स्न्यादिपदे श्रुतिमेवान्यथाकारमङ्गाणि कियन्त्यपि काव्यालंकारविद्याभ्यासोद्बोधान्निरसूत्रयत् उपक्रमो दोषगुणा
लंकाराः पर्यायकः संप्रदायः कवेस्तस्य समर्थ्यमप्यविभ्रमः अष्टौ रत्नानि दीप्तानि संत्यलंकारशेखरे चत्वारः स्युरलंकारे संप्रदायमरीच
यः सामर्थ्ये द्वौ परस्मिंस्तु पंचके स्युस्त्रयः क्रमः मामकीनां कृतिमिमां दूषयतो दूषयन्ति ये काव्यवार्तां न जानन्ति ते नूनं पांशुलाः स्मृताः आस्तेयद्यपि
पूर्वपण्डितकृतव्याख्यैव संख्यावतामानन्दाय तथापि केशवकवेर्वाचामियं गुम्फना व्याख्या सौष्ठवशब्दलाघवमिथः संबन्धपूर्वापरप्रत्य
यप्रतिबंधनिर्मलगुणाः कुत्राप्यतो लभ्यताम् तर्कप्रौढमतिः प्रशस्तकविता वल्लीवसन्तोत्सवः कोप्यव्याकरणप्रपंचचतुरोऽलङ्कारपा
रङ्गमः ॥ श्रीमत्केशवमिश्रमद्भुतगुणाधारं नियुज्य स्वयं चक्रे शक्रसमप्रबन्धममलं माणिक्यचन्द्रो नृपः ॥ इति श्रीमन्महाराजमाणिक्यचन्द्र
कारितकेशवमिश्रकृतावलंकारशेखरे विश्रामरत्नम् ॥ शास्त्रीगोकुलचन्द्रस्य श्रीमन्नालालशर्मणा ॥ यत्नात्सुश्रममयं प्राप्य शिलावर्णैः सुशोधितैः
श्रीमद्द्विजवरकमलदिवाकरेण गणेशशर्मणा शोधितोयम् मानमंदिरसन्निधौ वाराणसीसंस्कृतयन्त्रालयेऽलंकारशेखराख्यो यं ग्रन्थो मुद्रितः संवत १९२२

अ०शे०सू०
३८

अ॰शे॰ ३९

